तेषां पत्कज मधुपाः सूरयो रत्नशेखराः ।
सारं सूत्रात्समुद्धृत्य चक्रुः संबोध सप्ततिं ।३।
त्रिभिर्विशेषकम् ।।७६।।

तेषामनुक्रमे रेनुः सूरीशाश्चन्द्र कीर्त्तयः ।
तेषां पट्टे सुविख्याताः सूरयो नामकीर्त्तयः ।१।

तदीय पट्ट पाथोज प्रकाशे रविसंन्निभा ।
श्री हर्षकीत्ति सूरीन्द्रा राजंते जयिनो भृशं ।२।

श्री मानकीर्ति सूरिणां शिष्यैरमरकीर्तिभिः ।
सूरिभिः सुगमावृत्तिः कृता संबोधसप्ततिः ।३।

इति श्री संबोधसत्तरी वृत्ति संपूर्णा ।। ग्रन्थांग्र ८२२ ।।

Post-Colophon : यदक्षर परिभ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं कृपया शोध्यं संतो हि न तु (सन्त्येव) वत्सलाः ।।१।।

## 1647/13217 स्वप्नसप्तति-सटीका

Opening : ।।६०।। ॐ नमो अर्हद्भ्यः ।। अधुना क्रियाविकलस्यापि भावस्य प्राधान्यं दर्शयन् दृष्टान्तमाहं ।। अविकरियाइविसुद्धोभावो पावक्खय छमोभणिउ । अन्ने हिविउहेणं नेणट्ठानाएण लोगामि ।।१।।

Closing : तदेवाह । जं सक्कइ तं कीरइ जं च न सक्कइ तहेव लछहणं । केवलि जिणेहिं भणियं सद्दहमाणस्स सम्मत्तं ।। व्याख्या ।। यच्छक्या ते सदनुष्ठानं केवलि जिनैर्भणितं तद् निगूहित बलवीर्यैः क्रियते । यत्तु न शक्यते विशिष्ट धृति संहवने दिवि कलत्वेन तस्याश्रद्धानं तत्कारिष्वंतरंगो बहुमानः शुद्ध प्ररुपणं च । ततश्चेवंश्रद्दधतः प्ररुपयतश्च सम्यक्त्वं सद्दर्शनं जिनैः प्रतिपादित-मिति क्रिया संवंधः ।। ६ ।। ३५ ।।

Colophon : स्वप्नसप्तति टीका समाप्ता ।।

## 1685/13374 कर्मग्रन्थ (बन्धस्वामित्व-षड्शीति) सटीक

।।६०।। सम्यग् बंध स्वामित्वे । देशकं वर्द्धमानमानम्य बंधस्वामित्वस्य व्याख्येयं लिख्यते किंचित् ।। इह स्वपरोपकाराय यथार्थाभिधानं स्वामित्व

प्रकरणमारिप्सुराचार्यो मंगलादिप्रतिपादिकां गाथामाह ।। बंधविहाण विमुक्कं०

Closing संप्रति षडशीतिसंख्यगाथाप्रमाणत्वेन यथात्वर्थं षडशीतिकशास्त्रं समर्थयन्नाह । इयसुहुमच्छवियारो इत्यादि पूर्वोक्तप्रकारेण सूक्ष्मो मंदगत्य-गम्योयोऽर्थः शब्दाभिधेयं तस्य विचारणं लिखितोऽक्षरविन्यासीकृतः । पंचसंग्रहादिशास्त्रे इति शेषः । कैरित्याह । देवेन्द्रसूरिभिः । करालकलिकाल पातालतलावमज्जद्विशुद्धधर्मधुरोद्धरणधुरीणश्रीमज्जगच्चन्द्रसूरिक्रमकमलचचरी - कैरिति ।। इति देवेन्द्रसूरिविरचिता स्वोपज्ञषडशीतिटीका समाप्ता ।।

Colophon : विष्णोरिव यस्य विभोः पदत्रयी व्यानशे जगन्निखिलम् ।
सूत्रार्थसार्थदेशी य श्रीवीरो जिनो जयतु ।१।

कुंदोज्ज्वलकीर्तिभरैः सुरभीकृतसकलविष्टपाभोगः ।
शतमखशतनतपादः श्री गौतमगणधर पातु ।२।

तदनुसुधर्म्मस्वामी जंबूप्रभवादयो मुनिवरिष्ठाः ।
श्रुतजलनिधिपारीणाः भूयांसः श्रेयसे संतु ।३।

ततः प्राप्ततपाचार्येत्यभिख्यो भिक्षुनायकाः ।
समभुवन् कुले चान्द्रे श्रीजगच्चन्द्रसूरयः ।४।

जगज्जनितबोधानां तेषां शुद्धचरित्राणाम् ।
विनेयाः समजायंत श्रीमद्देवेन्द्रसूरयः ।५।

स्वान्ययोरुपकाराय श्रीमद्देवेन्दसूरिणा ।
षडशीतिटीकेयं सुखबोधा विनिर्ममे ।६।

विबुधवरधर्मकीर्तिः श्रीविद्यानन्दसूरिमुख्यबुधैः ।
स्वपरसमयैककुशलैस्तदैव संशोधिता स्वयं ।७।

यद्गदितमल्पमतिना सिद्धांतविरुद्धमिह किमपि शास्त्रे ।
विद्वद्भिस्तत्त्वज्ञैः प्रसादमाधाय तत् शोध्यम् ।८।

षडशीतिकशास्त्रमिदं विवृण्वता यन्मयाऽर्जितं सुकृतम् ।
तेनोऽस्तु भव्यलोकः सूक्ष्मार्थविवरणे चतुरः ।९।

इति षडशीति टीका । ग्रन्थाग्रं० २००० ।

Post-Colophon : संवत् १६४९ वर्षे फालगुन शुक्लद्वादश्यां श्रीलाभपुरनगरे पातिसाहि-श्रीअकब्बरप्रदत्तयुगप्रधानपदसमलंकृतखरतरगच्छेशभट्टारकयुगप्रधानश्रीजिनचन्द्र-

सूरिराजानां श्रीजिनसिंहसूरियुतानां भूशक्रचक्रचर्चितचरणारविन्दमहाराजाधिराजमहाराजश्री रायसिंहैः कुंवर श्री दलपति प्रभृति परिवारयुतैः पुस्तकमिदं विहापितं । तैश्च ज्ञानवृद्धयर्थं श्रीविक्रमनगरे चित्कोशे स्थापितं शिष्यादिभिर्वाच्यमानमाचन्द्रार्कं चिरं नन्द्यात् ।। श्रीः ।। ६ ।। शं ।।

## 1880/14533 न्यायावतार-सूत्रवृत्ति

**Opening :** ।।६०।। नमोविघ्नच्छिदे ।।

चिन्मयप्रकृतिर्भूयः सत्सभाजनभाजनम् ।
सासौ स्वायंभुवी शक्तिस्तात्प्रसन्ना सदा मम ।१।

अथ ये तु समुच्चिता असमुच्चिताश्च न्यायास्तदर्थं यत्नः क्रियते यथा संख्यमनुदेशः समानाम् १ रलोः सावर्ण्यम्०

इति श्रीमत्खरतरगच्छाधिराजश्रीजिनहर्षसूरिशिष्यवाचक दयारत्नविरचितं न्यायावतार सूत्र संदर्भोऽयम् ।।

प्रणम्य परमानन्ददायिनः परमेष्ठिनः ।
कुर्वे सारस्वतीं न्यायावतारे वृत्तिमुत्तमाम् ।१।

ज्योतिस्तर्कवरांबुजप्रकटनोद्यद्भास्करं सत्करं
छन्दोलंकृतिभासुरद्युतिमयं प्रल्हादचूड़ामणिम् ।
शब्दांभोधिविशोधिबोधिललितोल्लासावदातद्युतिं ।
श्रीमच्छ्रीजिनहर्षसूरि सुगुरुं वंदे तपागच्छपम् ।।२।।

अथेह श्रीमत्सरस्वतीलब्धप्रतिष्ठः श्रीअनुभूतिस्वरूपाचार्यशिष्याः श्रीसारस्वतीप्रक्रियायां नवन्यायान् सूत्रे एव सूत्रयंतिस्म अन्ये च व्याकरणान्तरंदृष्टा इदंज्ञापकादिस्पष्टा ये सन्ति ते सर्वेपि श्रीहेमाचार्यकृतवृहद्वृत्ति न्यायमंजूषादिन्यायशास्त्रसंग्रहदर्शनेन स्वसमुच्चिता असमुच्चिता इति कृत् संज्ञयार्थोद्धारः स्वोपज्ञन्यायावतारस्य स्वमनोविनोदाय प्राचीनान्वचानप्रतान सारस्वतन्यायव्याख्यानरचनाऽदर्शनाविर्भूत श्रद्धा तेन व्याख्यो १ दाहरण २ ज्ञापका ३ ऽनित्यता ४ तद्ज्ञापक ५ पंचप्रकार रूप व्याख्ययास्यां न्यायरत्नावलीं नाम्न्यां मया व्याख्यायन्ते । तत्र सूत्रादौ प्रारीप्सित ग्रन्थस्य निर्विघ्नपरिसमाप्तये शिष्टाचारप्रतिपत्तयेऽभीष्टदेवतास्मरणसंपत्तये च मंगलमभीप्सुराह ।।

चिन्मयप्रकृतिर्भूयः०

## 1946/13265 संग्रहणी-टीका

Opening : ।। श्रीवीराय नमः ।।

जयति नखरुचिरकांतिप्रहसितनतमघवामुकुटमणिकिरणः
परमकरुणापरीतो विश्वज्ञाताजिनोवीरः ।।१।।

नमतनिजबुद्धितेजः प्रतिहतनिःशेषकुमतघनतिमिरम् ।
जिनवचनंक निष्पन्नं जिनभद्रगणिक्षमाश्रमणं ।।२।।

यामकुरुत संग्रहणि जिनभद्रगणिक्षमाश्रमण पूज्यः ।
तस्या गुरुपदेशेन सारतो वच्मि विवृतिमहम् ।।३।।

Closing : अथतापकरणाभिहितार्थो विशिष्टश्रमणपर्याय प्राप्य सन् कृपया सर्वेषामासन्नीकृत इत्यात्मनोऽपराधस्थानमाशंक्याह ।। जडद्वियमित्यादि ।। यत् उद्धृतश्रुतात् प्रज्ञापनादेः कालान्तरे प्राप्यं पूर्वाचार्यकृतं वा यदुद्धृतमथवास्य मत्पातक्षंतव्यं श्रुतार्थधरैस्तथैव श्रुतदेवतयेति ।।

संग्रहण्यां मते दोषाद् व्याख्याते भोयदन्यथा
श्रुतर्थिनः समस्तं तत् क्षंतव्यं बालदोषवत् ।।
संग्रहणे विवृत्तिमिमां कृत्वायदवापि मलयगिरिणेह
कुशलं तेन लभन्तां श्रुत्वाः सर्वेपि जिनवचनम् ।।

Colophon : इति श्रीमलयागिरिविरचिता संग्रहणी-टीका समाप्ताः ।।६।।

Post-colophon : श्री जिनराजसूरिशिष्यश्रीजिनभद्रसूरिसुगुरुपदेशेन ।। ६ ।। ६ ।। ६ ।।

सं० १४८४ वर्षे शंखवालशाखायांऊकेशवंशीय तलपाटकपुरवास्तव्यं सा० देथा पुत्र सा० लखा सा० भादा सा० केल्हा सुश्रावकैर्लेखिता विश्राणिता च श्रीकीर्तिरत्नाचार्यवर्याणां शिष्याय शान्तिरत्नगणये ।। वाचनार्थं ।। ६ ।। श्रीकीर्तिरत्नाचार्यमिश्राणां संसारिवर्गबांधव श्रीखरतर सा० लखा सा० भादा सा० केल्हाद्यैः श्राद्धैः सपरिवारैः स्वपितृ सा० देथा मातृ देवलदेवी पुण्यार्थं ।।छः।।

## 1999/15700 समयसार-प्रकरण-सटीक

Opening : ।। ६० ।। अर्हं ।।

सव्वन्नू मोक्ख मक्खंति चउ व्वग्गंमि उत्तमं ।
सुहं जउ तिवग्गम्मि दिट्ठं एकति अंनहु ।।१।।

धम्माउ हेम निग्रलो वमं जीवा समज्जिउ ।
पुण्ण कम्मं भवे ठंति सुहा भासेण गव्विग्रा ।।२।।

ग्रत्थाउ पयडं चेव वह बंधाइ ग्रं दुहं ।
लहंता किर दीसंति ग्रज्जणे रक्खणे विग्र ।।३।।

लसंत सुखहे सरस पेरंत वीर सस्सय ।
कहं पसंस कामस्स जुता दुग्रइ हेड़णो ।।४।।

तम्हाणं त सुहं खीण समग्र दुह संतइं ।
मोक्खं विग्र पसंसंति जरामरण वज्जिग्रं ।।५।।

लहंति तं पुणो सम्मत्ताणादिट्ठि चरित्रंड ।
ग्रारा हि ग्रांउ काऊणं सव्व कम्म क्खयं जिग्रा ।।६।।

तत्थ सव्वन्नु परुवि ग्राणंजह ट्ठिग्राणं तत्ताणं जे ग्रव बोहे तं सम्मत्ताणं तिभस्यइ । तत्ताणि पुण सत्त पसत्ताणि । तंजहा ।। जीवा ग्रजीवा०

**Closing :** ततश्च जिनैषाय मुक्तिगतये पयांति । तत्र जिनोक्तविधिमार्गेण गच्छंतीति जिनै सप्रया: मोक्षमार्गाराधका इत्यर्थ: अथवा ईषि गतिहिंसा-दर्शनेष्वितीसणसीषो हिंसा इकामस्तस्य इषि: संघौ कृते ईष: कामवध: ततश्च ज न च वुद्धवत् ईषाय कामधाय प्रयस्यंति । प्रयततेवेति क्विपि प्रयसं जिनेष प्रयतो वा । ग्रंत्य व्यंजनस्येति प्राकृते ग्रंत्यव्यंजन लुक् । स्मर पराभावना-द्युक्ता इत्यर्थ: ।। तद्या देवानंदसमुन्नतिहेतव: । देवानंदसूरिनाम्न: स्वशिष्यस्य समुन्नतिकरा:संग्रहोपग्रहज्ञानादिप्रापणपदस्थापनप्रवणस्वगुरुप्रसाद. मूला हि शिष्यस्य सर्वापि गुणवृद्धि: ।।६।। इति **समयासारटीकायामाराधना-विराधनाफलनिरुपणोनाम दशमोध्याय: ।।छ:।।**

**Colophon :** श्रीपद्मप्रभगणधरपदपद्मद्वंद्वराजहंस इमां ।
देवानंदो व्यतनुत टीकां स्वोपज्ञां **समयसारस्य** ।।१।।

संदृभ्य **समयसारप्रकरणमेतत्** सटीकमपि मया ।
यत्पुण्यं तेन भवत्वरिवलजनो जिनमतेभक्त: ।।२।।

ग्रर्हंत: सिद्धा: साधुगण: केवलिमतस्तथा धर्म: ।
मंगलरूपोलोकोत्तमा: सदा संतु मे शरणम् ।।३।।

निधिरसयुग शशि **१४६९** संख्ये वर्षे विक्रमनृपात् ।
सहसि मासे शुक्ले त्रयोदश तिथौ सौम्य दिने पूरिटीकेयम् ।।४।।

उत्सूत्रमत्रजातं यन्मतिमान्द्यादिभिः समग्रं तत् ।
संशोधयंतु बाढं बहुश्रुता मयि कृपां कृत्वा ।।५।।

यस्याः प्रसादतो भृशं गंभीरस्यापि समयसलिलनिधेः ।
पारं प्रयांति भव्याः श्रुतदेवी श्रेयसे सास्तु ।।६।।

समाप्तेयं समयसारप्रकरणटीका ।।६।। शुभं भवतु ।। ।।६।। कल्याण मस्तु ।।६।।

Post-colophon : संवत् १५५० वर्षे माघ सुदि १ बुधे लिख्यतं ।।६।।

## 2297/17340 शान्तिनाथचरित्र-सस्तबक

Opening : ।।६०।। श्रीशान्तिनाथाय नमः ।।

श्रेयोरत्नाकरोद्भूतामर्हल्लक्ष्मीमुपास्महे ।
स्पृहयंति न के यस्यै शेषश्रीविरताशयाः ।१।

वृषेण भाति यो ब्रह्म कृता लक्ष्म गते न वा ।
इत्यन्वर्थाय तस्मै श्रीऋषभस्वामिने नमः ।२।

येऽन्तरंगारिषड्वर्गोपसर्गोग्रपरीखहैः ।
न जितास्तेऽजितस्वामिमुख्यानन्दं तु तीर्थपाः ।३।

कृतारिष्टतमः शान्तिश्चारुहेमतनुद्युतिः ।
प्रत्यादिष्टभवभ्रान्तिः श्रीशान्तिर्जयताज्जिनः ।४।

गृहिव्रतोपमायस्य भवाः श्रोतृशुभावहाः ।
शान्तिनाथस्य तस्यैव चरित्रं कीर्त्तयाम्यहं ।५।

Closing : इत्थं शांतिजिनेश्वरस्यमयका प्रोक्तो भवद्वादश ।
श्राद्धद्वादशसंख्यसद्व्रतकथा संलेखनाबंधुरः ।।
सच्चक्रायुधनामधेयगणभृत् व्याख्यानसंवद्ध तो ।
व्याख्ये तं सकलं चरित्रमपि तं तस्यैव तीर्थेशतुः ।।
यस्योपसर्गा स्मरणे प्रयांति विश्वे यदीया स्वगुणा नमान्ति ।
यस्यांगलक्ष्मी कनकस्य कांतिः संघस्य शान्ति सकरोतु शान्तिः ।।

Colophon : इत्याचार्य श्री अजितप्रभसूरिविरचिते श्री शांतिनाथचरित्रे द्वादशभव-वर्णनोनाम षष्ठः प्रस्तावः समाप्ताः सर्व ग्रन्थाग्रं ५००० ।।

**Post-colophon :**

श्रीमत्तपागच्छगगनसूर्यश्रीविजयदानसूरिन्द्र समभूत् ।
तत् संताने विबुधः श्रीगंगविजयाह्वः ।१।

तत्पादपद्मषट्पदः प्रवरा श्रीमेघविजय नाम ।
न समजायेतं कवीन्द्रा विमलचरणभूषितांगाः सन् ।२।

तत्पादपद्मसेवी जयति श्री भाणविजय नाम ।
कीर्त्तिप्रतापगेहं सद्गीतार्थं विभूत ।३।

तच्चरणकमलसेवीशिष्यो लक्ष्मीविजय इति—
विदधेस्तबकार्थीयं गुरुकृते ये शान्तिचरितस्य ।४।

निधिग्रहभिः पयोधीन्दुसम्मितेवचल तृतीयाय लिखितं इदम् पुस्तकं शोधनीया पंडितैः छन्द बुधौ । इति श्री शान्तिचरित्रं। सूत्रस्तवकार्थं संपूर्णं । सं० १८५८ वर्षे मिति वैशाख सुदि ६ दिने मुनि हीरविजय लि० ।।

स्तबके—संवत् १८५८ वर्षे मिति वैशाख सुदि ६ दिने टबार्थ लिखतां पं० धनविजयगणि श्री राजगढ़नगर चतुर्मासि कृत श्री शांतिनाथचरित्र संपूर्णं ।

## 2456/14066 कुमारपालचरित्रम्

**Opening:**

।।६०।। अर्हं ।।

चिदानन्दैककंदाय नमस्तस्मै परमात्मने ।
शिवश्री रमते यस्मिन् हंसीव सरसीरुहैः ।।१।।

श्रीनाभेयोजिनः सोव्यद्भुक्तिमुक्त्युपदेशतः ।
यः सतां दर्शयामास द्विविधामपिनिर्वृत्ति ।।२।।

अभ्रांतस्थितिरोचिष्णुः शश्वत् कौमुदमेधयन् ।
मृगलक्ष्मजिनाधीशस्तमस्तोमं निरस्यतु ।।३।।

कृष्णवर्णोऽपि यो ध्यातः पुष्णाति परमां श्रियम् ।
सोद्धुतैकनिधिर्भूयाद्भूत्यै श्रीनेमिनायकः ।।४।।

अमादिवांतरे यस्य मूर्ध्नि भाति परमाहः ।
स्फूर्जत्फणिमणिव्याजात् स श्रीपार्श्वः श्रियं क्रियात् ।।५.।

श्रीवीरः शिवतातिस्ताद्यस्यज्ञानप्रभाकरः ।
आसीत्तमोपहत्वेन सतां सन्मार्गदर्शकः ।।६।।

तपसा लब्धयो यस्य वश्यादास्यइवाऽभवन् ;
श्रीगौतम: समेतुष्ट्यादग्रणी गणधारिणाम् ।।७।।

यस्य नाम्नि निलीनेव कलेर्भीताद्यु सद्गवि ।
ध्यातृणां सर्वकामाप्ते: स श्री कृष्ण: मुनिर्मुदे ।।८।।

कविस्तोमकृतोपास्तिर्जनता पापहारिणी ।
नालीकस्थितिरोचिष्णु: पुनीयान्मां सरस्वती ।।९।।

प्राप्तक्षायिक सम्यक्त्वा: श्रावका: श्रेणिकादय: ।
भूयांसोऽपिबभूवांस: प्रभावाढ्या: प्रभावका: ।।१०।।

अमारिकारकत्वेन तेषु स्तुत्योस्ति वस्तुत: ।
कुमारपाल: क्ष्मापालो धाम्नाधिष्ण्येषु चन्द्रवत् ।।११।।

ततोऽस्य चरितं किंचिद् वच्म्यहं स्वपुपूषया ।
प्रेरितस्तद्गुणग्रामरामणीयकसंपदा ।।१२।।

**Closing :** न प्रावीन कवी न लीन यशसे नैदं युगीनं स्फुरद् ।
विद्वत्साम्यकृतेन चात्मधिषणाज्ञप्त्यै ममायंश्रम: ।।

× × ×

श्री विक्रमनृपात् द्विद्विमन्वब्देयमजायत ।
ग्रन्थ: ससप्तत्रिशती षट्सहस्त्राण्यनुष्टुभां ।।७५।।

यावत्द्योतयत: स्वदीधितिभरैर्द्यावापृथिव्यांतरं ।
सूर्याचन्द्रमसौ निरस्ततमसौ नित्यं प्रदीपाविव ।।
तावत्तर्पयतादिदं नवसुधानिष्यंदवत् सुंदरं ।
पृथ्वीपालकुमारपाल चरितं चेतांसि पुण्यात्मनाम् ।।७६।।

**Colophon :** इति श्रीकृष्णर्षीय श्रीजयसिंहसूरिविरचिते परमार्हतश्रीकुमारपाल-भूपालचरिते महाकाव्येश्रीकुमारपाल स्वर्गगमन वर्णनोनाम दशम: सर्ग: समाप्त: ।।६।।

**Post-colophon :** सं० १४७८ वर्षे श्रावण वदि ११ भृगुदिने श्रीकुमारपालचरित्रं पुरोहित हरीयाकेन लिखितं ।। शुभं भवतु ।। कल्याणमस्तु ।। श्री ।। ६ ।।

## 2509/14350 प्रियविलास

**Opening :** ।। ६० ।। श्रीगुरुभ्यो नमः ।।

प्रणतमानसहंसनिवासिनी विबुधवांछितदानविलासिनी ।
विशदवर्णपदांबुसरस्वती मम मतिं वितनोतु सरस्वती ।।१।।

जयतु भागवतः करुणाकरणः श्रुतपयोधिसमर्थकतावरणः ।
यदभिषंगितया जड़मानसे स्फुरति पद्यशतं समयेप्यहो ।।२।।

जयति कांचिदनंतरसास्पदा गुणवती युवती रसनिम्नगा ।
यदुदके कुरुते रतिखेलनं स्मरमहीपतिरेत्य सुलीलया ।।३।।

**Closing :** पद्यानां शतमद्भुतामृतरसस्पर्द्धानिबद्धादरं ।
यत्र प्रेमनिबंधनं रसवतां शृंगारधाराधरम् ।।
प्रेयः कामविलासदः प्रियविलासाख्यो मया वर्णितो ।
ग्रंथोऽयं जयतात्सतां सुखकरः संशोधितः पंडितैः ।।६६।।

यद्यप्यनेके रसभावबद्धाः ग्रंथा निबद्धाः कविभिर्जयंति ।
बालत्वलीलास्फुटदर्शनेन यास्यामि नो हास्यपदं बुधानां ।।१००।।

अनिशमिहयदीयाराजहंसीव कीर्तिः विमलजलधिजातैः पंकजैः प्रीतिमेति
प्रणतनरवरेन्द्राः सच्चकोरद्विजेन्द्राः सुमतिविजयसंज्ञाः श्रेयसे सन्तु विज्ञाः
।।१०१।।

नित्यं पदांबुजनमस्करणैकतानः तेषां शिशुर्गुरुगुणस्तुतिं सावधानः ।
हर्षेण रामविजयो रसिकप्रियाणां संजीवनं प्रियविलासमिमंचकारः
।।१०२।।

**Colophon :** इति श्रीमद्रामविजयविरचितः प्रियविलासाख्यो ग्रंथः समाप्तः ।

**Post-colophon :** श्री संवत् १८३७ वर्षे मासोत्तममासे मार्गशीर्षशुक्लात्रयोदश्यां दिने लिपिचक्रे ।। श्रीः ।।

## 2525/14387 राक्षसकाव्यम्- 'सज्जनानन्ददायिनी' टीकासहितम्

**Opening :** ।।६०।। ऐंनमः ।। श्री नाभिसूनवे नमः ।।

कश्चिद्वनं बहुवनं विचरन् वयस्थो-
वश्यां वनात्मवदनां वनितां वनार्द्रां ।

तरवयंरिप्रदमुदीक्ष्य समुत्थितं रवे
नागामिमां मदकलः सकलां बभाषे ।१।
एतावदुत्तमवचः सुमनाः समुक्ता
रंत्वादिनं सहतयाय प्रियाह्यदीना ।
युक्त चतुर्भिरनुड्डुद्भिरदीनवाङ्भिः
आरुह्य यानमथ संप्रययौ स्वगेहम् ।२०।

एतावदिति एतावदुत्तमवचः एतावद्यथोक्तमुत्तमवचः प्रकृष्टं वचनं शोभनं मनो यस्य स भवति सुमनाः समुक्ताऽभिधाय रंत्वा क्रीडित्वा दिनं दिवसं कयार्द्धं प्रियया भार्यया सार्द्धं हि पादपूरणे व्ययशास्त्रेऽदीनः नदीनः प्रहृष्टः युक्तं चतुर्भिरनुडुद्भिर्वलीवर्दैः कथं भूतैः अदीनवाङ्भिः अदीनं वहन्तीति अदीनवाहास्तैः अदीनवाङ्भिः अथानन्तरं पुरुषो गेहं मंदिरं प्रययौ संप्रयात इत्यर्थः ।२०।

**Colophon :** इति श्री महाकविनामलयदेशजन्मना श्रीरविदेवेन विरचितं काव्य राक्षसं समाप्तम् ।

इति श्रीमहाकविना मलयदि(दे)शजन्मना श्रीरविदेवेन विरचितं काव्य राक्षसं विंशतिहृदयपद्योपेतं सज्जनमनानंददायिनी राक्षसकाव्यटीका समाप्ता ।

**Post-colophon :** संवत् १७८३ वर्षे मिति श्रावण वदि १३ दिने वार शनौ लिखितं उपाध्याय श्रीकर्पूरप्रियगणिना ।। श्रीरस्तुः श्रीः श्रीः ।।

## 2527/16156 वैराग्य-फाग

**Opening :**

सकलकमला केली धामत्वदीय पदांबुज-
प्रणति निरतः । श्री नेमीश स्मृत श्रुत दैवतः ।
प्रथम चरमा वा विश्राणां तुलातुलितौ रसौ ।
रचयति यतिफागं नारी निरास इति श्रुतं ।१।

रति पहुती मधुमाधव साधव समरस पूरि ।
जिम मह महइ महीतलि सीतल सुजस कपूर ।।२।।

**Closing :**

पदमिनी कुल मधुराजलिराजलिजिणिति जीवेमि ।
जगि जयउ नितनितसुरयण सुरयण मंडन नेमि ।।५२।।

लक्ष्मीकेलिनिकेतकांतविकसद्वक्त्रारविन्दस्फुर-
द्वाणीकेनवचंचरीकचरुणीभंकारभात्कारिणीं ।
भोज प्राज्यकुलेज्यपल्वलमुवं राजीमती पद्मिनी
हित्वा रैवत रत्न मंडनमभूय्य: सोस्तु नेमिश्रिये ।।५१।।

**Colophon :** इति वैराग्यफाग: ॥

## 2532/14322 कर्पूरमंजरी-पर्यायसहिता

**Opening :** ।।५०।। ॐ नम: श्री सरस्वत्यै: ।।

भद्दंभोदु सरस्सई इ कइणो नंदतु वासाइणो
अस्माणंपि परं पयद्ध वराबाणी छइल्लपिया ।
वच्छोमी तह मागही फुरदुणो सा किं च पंचालिया
रीदीयाउ लिहंदु कव्व कुसला जुन्हं चऊरा इव ।।१।।

**Colophon :** भो वयस्स सा मरीऊ उल्लुल मंगलाई दिज्जंतु । हुदवहे लज्जा मोक्खोय कीरदु । इति तथा नाटयंति । राजा विवाहं निर्वर्त्य सोत्साह यथार्हं सपरिजनो नि:क्रान्त: एवं महारायेण सव्वाणं पच्चक्खंपरिणीदा कप्पूरमंजरी। सर्वे निष्क्रांता चतुर्थं जवनिकांतरं समाप्तं । छ । शिवमस्तु । छ ।।

**Post-Colophon :** सं० १४६२ मार्गवदि ७ शनौ श्री पत्तनपुरेऽलेखि । छ । यथा दृष्टं लिखितं । छ । श्री: ।।

## 2553/17171 सुभाषितकोश-टीकासह

**Opening :** ।। ६० ।। अर्हं ।।

नत्वा सर्वविदं विरच्यते इयं टीकेतितारागण:
कोशोयं परया प्रदोषविरहे या भाति कांत्या यथा ।
अस्माभि: सुविविक्तवाक्यपवनैरुत्सारयद्भिर्महा
मोहांभोदततीर्जनस्य मनसिद्योम्नीवनीतेमृजां ।।१।।

नंदउसच्छंदगई निम्मल पयपूरगा रचमहग्घो ।
जलहि पडिरुद्ध पसरो सुकईए सरस्सई पवहो ।।१।।

हिययाइं सज्जणाणं रंजइ कसिणेइ खलयण सुहाई ।
सव्वं सुहासियंपि हुजाए नमो ताए सुकईए ।।२।।

उययमदो संतरियं फुरिय पयावंपि सेवियं सुहयं ।
नमिमो विसमाइच्चस्स ठइय तेयस्सि निउरं वं ।।३।।

सुयणो थुइ निरवेक्खो विवरीयं फलइ खलयण पसंसा ।
सज्जणखल निरविक्खं जहट्ठियाणं गुणाण नमो ।।४।।

Closing : परदेस देउला वासियाए असईए पेल्लिय पइयट्ठं ।
चोरं काउणपइं कुरियाण समप्पिड भत्ता ।।१७३।।

जो महइ परस्सधणं कुप्पइ तस्सप्पणोणमग्गंतो ।
जो रक्खइ निययंचिय कुप्पइ तस्सेय विवरीयं ।।१७४।।

गंभीरो अण्णोच्चिय स एस सरसत्तणेण अग्घविड ।
कइकित्तीए समुद्दोअणेय गाहाउलो को सो ।।१७५।।

Colophon : महावादींद्र श्रीबप्पभट्टिसूरिकृतस्यसुभाषितकोशस्य द्वासप्तत्यधिक-गाथाशतस्य ।।१।। समाप्ता टीका तारागणस्येति ।।छ।। शुभंभवतु ।। कल्याण-मस्तु ।। ग्रंथाग्रं श्लोक १००० संख्या ।।

## 2585/14288 पाणिनीय-प्रयोगमुखम्

Opening : ।।६०।। श्री अर्हद्भ्यो नमः ।।

प्रयोगमिच्छता ज्ञातुं ज्ञेयं कारकमादितः ।
संज्ञया षड्विधाभेदास्त्रयोविंशतिधा पुनः ।।१।।

तत्र पंचविधः कर्त्ता कर्म्म सप्तविधं भवेत् ।
करणं द्विविधं चैव संप्रदानं त्रिधा मतम् ।।२।।

अपादानं द्विधाचैव तथाधारश्चतुर्विधः ।
करोति कारकं सर्वं तत्स्वातन्त्र्य विवक्षया ।।३।।

Closing : शतृ यथा ।। कटस्यकुर्व्वन्नित्येवमादि ।। शानच् यथा ।। कटस्य कुर्व्वाणइत्येवमादौ समासो न सिध्यति इति । कथां पुराणेतिहासकाव्य नाटकादिष्वप्रसिद्धत्वात् ।।

Colophon : इत्याचार्य श्रीधर्मकीर्तिविरचिता पाणिनीयप्रयोगमुखपुस्तकं पर्याप्तम् ।।

## 2599/14285 मध्यसिद्धान्त कौमुदी 'कौमुदी विलास' टीका

**Opening :** ।। श्री परमात्मने नमः ।।

प्रणौमिदुर्गां परमार्त्तिहंत्रीं सर्गस्थितिप्रच्यवमूलकर्त्रीम् ।
अनादिमायां परमां विचित्रां तदंकखेलंतमिभास्यदेवम् ।।१।।

अभूद्द्विजेन्द्रः शिवराजधान्यां गोवर्द्धनो मौनिकुलाब्धिचन्द्रः ।
निवारितद्वैततमःप्रचारो नृपादिभिः पूजितपादपद्मः ।।२।।

तस्माद्द्विजाग्रो रघुनाथनाम्ना बुधः समाराधितशंभुपादः ।
तर्कादिशास्त्रोदधिकर्णधारो बभूवमान्योऽखिलभूपतीनाम् ।।३।।

रघुनाथ तनूजेन जयकृष्णेन धीमता ।
मध्यसिद्धान्तकौमुद्या विलासोऽयं वितन्यते ।।४।।

सुशब्दव्रातश्रीकुमुदवनविद्योतनकरी
सदा सद्व्युत्पत्ति प्रसरणपरानंदनझरी ।
कुशब्दध्वांतस्य प्रसभमभिविध्वंसनकरी
कृतिर्भूयादेषा बुधजनमतः प्रांगणचरी ।।५।।

पाणिनीयव्याकरणागमसिद्धांतरत्नजिज्ञासूनां वालानामुपकृतये परम-कारुणिको वरदराजः प्रारिप्सितस्य ग्रन्थस्याविघ्नपरिसमाप्त्यर्थम् अविगीत-शिष्टाचारपरंपराप्राप्तं गुरुनमस्काररूपं मंगलाचरणं शिष्य शिक्षार्थं ग्रंथे उपनिबध्नन् विषयप्रयोजनसंबंधाधिकारिणश्चसूचयन् चिकिर्षितं प्रतिजानीते ।।

**Closing** छिद्रः शसासाहचर्यात्सुवेवामगृह्यते तेनचिनोतेलंङादेशस्यमिपस्तस्थ-स्यमि पामित्यमि सार्वधातुकेतिगुणे अचिनोम् इति स्थिते आकारादेशो न अचिनवं गोरितिङ सिङसोश्चेति पूर्वरूपं इत्योदंताः रायो अष्टन आविभक्ता-वित्यनः आदिभक्ताविति चानुवर्तते तदाह आकारांतादेश इति अर्थं रैं विभवा अपीत्यमरः इत्यैदंतांः ग्लौरिति ग्लौमृगांकः कलानिधिरित्यमरः इत्यजंता पुल्लिंगाः ।।

**Colophon :** इति श्रीमुन्मौनिकुलतिलकायमान श्रीगोवर्द्धनभट्टसूनुरघुनाथांगज जयकृष्णकृत मध्यसिद्धांतकौमुदीविलासेऽजंतपुल्लिंगप्रकरण समाप्तिमगात् ।। श्री ।।

## 2617/17109 चान्द्रव्याकरणम्

Opening : ॥६०॥ ॐ नमः सिद्धेभ्यः ॥

प्रणम्य शिरसावीरं स्वल्पैर्व्यापिरक्षरैः
लक्षणं प्राकृतं वक्ष्ये किंचिद्वृद्धमतादहं ।१।

क्वचिल्लोपः क्वचिद्संधिः क्वचिद्वर्णविपर्ययः
आगमोंतादिमध्येषु लक्ष्यः स्यात्सः सुभाषितात् ।२।

Closing : शौरसेन्यांतकारस्यदकारो भवति दाव ताव कदं कयं पदं पयं सुदं सुग्रं इत्यादि ।

संस्कृतं प्राकृतं चैवापभ्रंशोऽथ मागधी ।
पिशाचिकी सूरसेनी च षट् भाषाश्च प्रकीर्त्तिता ।१।

colophon : इति चंडकृत प्राकृतलक्षणे भाषांतरविधानं चतुर्थं समाप्तं ।४।

Post-colophon : सम्वत् १९२६ वैशाख कृष्ण द्वादश्यां शनिवारे ।

## 2653/14272 सारस्वत टिप्पणम्

Opening : ॥६०॥ श्रीगुरुभ्योनमः ॥

तदर्थंतत्त्वाऽभिनिविष्टबुद्धिगर्वंप्रतिक्षिपकयुलिशैः । (क्षेपकयुक्तिलेशैः)
अल्पैःपदैर्व्याकरवामकामं सारस्वतं व्याकृतमप्यनल्पैः ॥१॥

प्रारिप्सताविघ्नसमाप्तिशिष्टाचारावनाभ्यां प्रणतेष्टदेवाः ।
श्रोतृप्रवृत्यैर्विषयादि तावदाचार्यधुर्या इह संगिरंते ॥२॥

Closing : वर्णसमुदायादपिकारोदृश्यते अहंकारः ऊँकारः ॥ लोकाच्छेषस्य सिद्धिरिति सूत्र बलादस्माभिदिङ्मात्रमुक्तं ॥ प्रक्रियां शुभां चक्रेऋजुकृतवानित्यर्थः ॥

colophon : कृष्णश्रमश्रीचरणोपसक्तिमवाप्य संप्राप्तमतिप्रकर्षः ।
क्षेमेन्द्रसूरिर्हरिभट्टसूनुः सारस्वतेटिप्पणमभ्यधत्त ॥१॥

व्याख्या गुणान्निपरीक्ष्येह चिरं नंदतु सज्जनः ।
दुर्ज्जनोप्यसतोदोषान् दुष्टाशयपरिस्फुटान् ॥२॥

इति श्रीनरेन्द्राचार्यसारस्वते क्षेमेन्द्रकृतं टिप्पणं समाप्तं । समाप्तेयं सारस्वती टीका ॥

**Post-colophon :** श्री वापड़ाऊ स्थान ।। श्री श्री साधुकीर्तिमहोपाध्यायतत्शिष्य वा० श्री श्रीमहिमसुंदरगणीनां तत् शिष्यमुख्यविद्वन्ज्ञानमेरुमुनीनां शिष्येणमुनि-विमलमुनिनालिलिखे ।। श्रीकल्याणमस्तु ।।श्री:।।

## 2658/14273 सारस्वतदीपिका

**Opening :** ।।६०।। श्रीसरस्वत्यैनमः ।। श्रीगुरवेनमः ।।

राढावंतंफणिपतिफणंराजमानं समंतात्-
गीर्वाणेशैर्दनुजमर्हितं वंद्यपादारविंदम् ।
नत्वापाश्र्वंगुरुमपि तथा मेघरत्नाभिधोहं
टीकांकुर्वेविमलमनसं भारतीप्रक्रियायां ।।१।।

कुमतिकमठ दैत्यक्रोधदावाग्नि मेघो
जनवनजविकाशोऽहम्र्मणीरम्यमूर्त्तिः ।
भवतु मयि विनीते विश्वविश्वप्रकाशी
सजलजलददीप्तिः पार्श्वनाथः प्रसन्नः ।।२।।

यस्यादुरापंकिलमंदप्रज्ञ:प्राप्य प्रसादं वचसांनिधि:स्यात् ।
भूयान्महामोहहरा शिशूनां सा भारती वाचि मम प्रसन्ना ।।३।।

वंदारुक्षितिपोत्तमांगमणिभिः संघृष्टपादांबुजा:
शब्दांभोधिविवर्द्धनैकविधवोवैदग्ध्यवागीश्वरा: ।
यावच्छासनमेवजैनमतुलंस्याद्वादविद्यान्वितं
तावद्विश्वजनेजयंतुविनयाद्या:श्रीधरा:सुन्दरा: ।।४।।

क्वासौ भारतीप्रक्रिया क्वाहं मंदो जड़ाशयः ।
तथापिधाष्ट्यमाधाय यथांप्रज्ञं प्रतन्यते ।।५।।

**Closing :** कात्स्न्येंनोदाहर्त्तुमशक्यत्वादनुक्तग्रहणार्थमाह । शेषा अस्मदनुक्ता: निपाता:निपातात्साध्याः कज्ञादयः शब्दाः । कनीस्थानंकन्याइतिनिपातः ।।६।।

**Colophon :** इति श्रीवृहद्गच्छेवाचक श्रीविनयसुन्दरशिष्यमेघरत्नविरचितायां सारस्वतंदीपिकायां तद्धितार्थं । इतिस्यादिप्रक्रियासंपूर्णा: ।। शुभमस्तु ।।६।।

## 2674/14286 सारस्वतप्रक्रियाःधातुपाठसारसंग्रह-'क्रियाचन्द्रिका' टीकायुत

**Opening :** ॥६०॥ श्रीविघ्नहर्त्रेनमः ॥

चिदानन्दमयं देवं सर्वज्ञं भक्तवत्सलम् ।
कृपापीयूषपायोधिं शीतरश्मिं नमाम्यहं ।१।

विलोक्यानेकशास्त्राणि बालानांहितकाम्यया ।
सारस्वते धातुपाठे क्रियते सारसंग्रहः ।२।

इहाचार्यः स्वशास्त्रस्य सुखावबोधायसंज्ञाकारि ग्राह ॥
उदात्ताःसेट इष्टव्या ग्रनुदात्तास्तथानिटः
इत्युत्सर्गंपवादोयमपवादोपिकुत्रचित् ।१। व्याख्या ॥

येषांप्रकरणाधातूनांउदात्तइत्संज्ञायांते । सर्वेसेटएवैष्टव्याःयथाभूसत्तायामित्यादिः इहोदातानुदात्तस्वरितानांस्वरूपलेशेनदृश्यते । उच्चैरुपलम्यमान उदात्त इति । उच्चैरुपलभं उच्चैःस्थानापेक्षया तथा चापिशलि शिक्षामधीते । उदात्तादीनां-बाह्यप्रयत्नं ॥

**Closing :** पसिनिर्वासेकिंतानेयस्यकेसर इति उणादोंसिद्धिःजुवेगेवल्लयसावल्लभ इति ऋतघृणागतिस्पर्द्धेषुकगेसंगेवङ्ग्राग्रहणे किए् गतो धनधान्येइत्यादयः सोम्नाग्रंथांतराद्ज्ञेयाः ॥

**Colophon :** इति धातुपाठटीकायांक्रियाचन्द्रिकायांचुरादिगणकंड्वादिगणनाम-धातुगणा.समाप्ता । इतिक्रियाचन्द्रिका समाप्ताः ॥

**Post-Colophon :** श्रीश्री १०८ श्री राजसोमजीचिरंजीविः ॥ श्रीश्रीसर्वग्रंथाग्रंथ ३३८० लेखकवाचकयो चिरंजीवीमुनिमोहनविजय लिखितं ॥

## 2716/14470 कविकल्पद्रुमधातुपाठ-'काव्यकामधेनु' वृत्ति

**Opening :** ॥६०॥ परमात्मने नमः ॥

येनावियद्विकरणैराख्यातैर्धातुलोद्भितैः ।
प्रकाशैः संप्रकाश्यंते क्रियास्तंनौमि गोपतिं ।१।

कविकल्पद्रुमं धातुपाठं विवरितुं निजम् ।
धातुवृत्तिःकाव्यकामधेनुर्नामविधीयते ।२।

**Closing :** इतिधातून्निर्घार्यापसंहरतिइति । इतिस्फीतसप्तद० सप्तदशानांशतानां समाहार: सप्तदशती । षट्कोनषष्टयाग्रधिका: षट्कोनषष्टाधातव।एव । स्कधास्तै:फलन्प्रतिस्कंधरूपाणिफलानियथेष्टमर्पयत् ।

**Colophon :** ग्रथग्रन्थकृदात्मानंख्यापयति ।

िद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेन वेदपदस्थेन बोपदेव द्विजेनय: ॥१॥

संपादयंतीमंकादौ कात्तं स्वरलसन्निधिम् ।
श्रयध्द विबुधा: काव्यकामधेनुमतंद्रिता: ॥२॥

व्युत्पादयंति शब्दज्ञा: स्वै: स्वै: सूत्रैरुदाहृती: ।
सर्वव्याकरणाहार्यां नास्यातेनालिखं ह्ययम् ॥३॥

स्वर्गे गीर्वाणनार्य: सुरपतिमभित: शाब्दिकानां वरेण्यं ।
पाताले शेषदेवंभुजगयुवतयो यस्य गायंति कीर्ति ॥४॥

यस्तीर्ण: शास्त्रपाथोनिधिमखिलमिमं गो: पदं वा सुराद्रौ ।
शिष्योकार्षीद्धनेश: कविकुलतिलक: केशविर्बोपदेव: ॥५॥

**Colophon :** इति श्रीपंडितबोपदेवविरचिता काव्यकामधेनुवृत्ति: समाप्ता: ॥

**Post-Colophon :** संवत् १६५६ वर्षे भाद्रवा सुदि ६ दिने श्री जालोरमध्ये पं० श्री दयाकेसरगणिशिष्यशिवचंदमुनिलिखितं ॥ श्री ॥

## 2719/14280 मुग्धबोधप्रदीप

**Opening :** ॥ ६० ॥ ग्रहँ ॥

ग्रथेत्यादि ग्रथशब्दो मांगलिक ग्रानंतर्याधिकारद्योतकश्च स्यादेरनंत्यादिरधिकृतो वेदितव्य इत्यर्थं ॥६॥ घोस्तिप् ॥ णुधुं ङ इत्यादि निर्देशाघोगेत्याद एतानि सातिशीतिशतसंख्यानिघो: पराणि प्रयुज्यंत इति एतानि तिबादीनि शब्दरूपाणि ।

**Closing :** ग्रथयुगपद्वचने कथं युगपद्वचने परो भवति विप्रतिसिद्धत्वात् तथा हिलै प्रथमस्त्रिक इत्वस्यावकाश: स पचतीदि युष्मदमध्यम इत्यस्यावकाश: त्वं पचमीति इतोभयं प्राप्नोति सच त्वं च पचंथ इति तत्र परोभवति विप्रतिषेधे

परमिति स्मरणात् एवं स चाहं च पा चा प इति सचत्वं चाहं च पचाम इति ज्ञेयं ॥६॥

**Colophon :** इति श्रीमुग्धबोधप्रदीपे श्रीत्याद्यर्याध्याय पंचमः संपूर्णः ॥ इति श्रीमत्पंडितवासुदेवविरचिते मुग्धबोधप्रदीपे त्याद्यंताधिकारः समाप्तः ॥६॥

## 2721/16981 प्रक्रिया-बालबोधिनी-टीकासहिता

**Opening :**

॥ श्रीजिनाय नमः ॥

हिमचंदनकुंदेंदुकुमुदांभोजसन्निभाम् ।
सारस्वतीं नमस्कृत्य क्रियते बालबोधिनी ॥१॥

प्रणम्य शंकरं नाथं त्रिदशानां जगद्गुरुं ।
प्रक्रिया क्रियते यत्नादेषा बालबोधिनी ॥२॥

## 2732/14568 आख्यातवाद

**Opening :**

॥ श्री जिनेशाय नमः ॥

अथेति ॥ पदस्मृतस्य वैशेषिकशास्त्रप्रतिपादितस्य पदार्थस्योपेक्षा महेत्वप्रसंगः तथा च प्रसंगसंगत्याह ॥ अथेति ॥ पदार्थेति । पदार्थानां तत्त्वं पदार्थ तत्त्वं निरुप्यते शिरोमणिनेतिशेषा अर्थात् खण्ड केषांचित् खण्डनमप्यायास्यति इति भावः ॥

**Closing :**

वृक्षं त्यजति इत्यादौ वृक्षवृत्तिविभागी मूलव्यापाराश्रयो विहग इत्यन्वयबोधः ॥ एवं जानातीत्यादौ आश्रयत्वे एव तिङ् शक्तिकल्पनात् । यथा करोतीत्यत्र कृत्याश्रयः कर्त्ता इत्युच्यते । तथा सर्वत्र धात्वर्थस्यापाराश्रय एव कर्त्ता इति गुरुमतं । वर्त्तमानत्वे संख्यायां चोभयंवादिसिद्धैव शक्ति । एतन्मतेत्वाश्रयत्वमिति गुरुमतं । अपीति । गुरुमतमपि वैयाकरणमतदूषणेन दूषितमिति बोद्धव्यं । तादृशेति । वर्त्तमानयत्नाननुभवस्याननुभवात् अनुपादेयं । नादरणीयमिति ॥

**Colophon :**

समाप्तोयमाख्यातवादः ॥ रामेश्वरभट्टाचार्याणां सन्निधौ पंडित हर्षनन्दनेन ॥ श्रीमदुग्रसेनपुरि । ग्रन्थाग्रम् १६०० ॥

## 2733/14473 उक्तिरत्नाकरः

**Opening :**

॥ ६० ॥ ॐ ऐं नमः ॥

स्मृत्वा श्रीभारतीं देवीं गुरुपादांश्च भक्तितः ।
उक्तीनांसंग्रहं वक्ष्ये स्वान्ययोर्हितहेतवे ॥१॥

तावत्तदुपयोगिविभक्तिस्वरूपं निरूप्यते । तत्र कर्तृकर्मकरण संप्रदानापदानाधाररूपाणि षट्कारकाणि । सप्तमः सम्बन्ध उक्तानुक्तभेदेन द्विधा षट्कारकाणि ।

**Closing :** अथकर्म कर्त्तरि । राचइ रच्यते । पाचइ पच्यते । दाझइ दह्यते । वाजइ वाद्यते । खाजइ खाद्यते । लुणाइ लूयते । घसाइ घृष्यते । कराग्र इ क्रियते । जणाइ ज्ञायते । वधाग्रइ वृध्यते । इति कतिचित्क्रियापदानि ।

**Colophon :**

राजन्वतीं श्रीजिनराजिसंतति कुर्वत्सु शश्वज्जिनचन्द्रसूरिषु ।
सूरीकृतश्रीजिनसिंहसूरिषु युगप्रधानेषु महोगमास्ति ॥१॥

खरतरगणपाथो राशिवृद्धौ मृगाङ्का-
यवनपतिसभायां ख्यापिताहन्मताज्ञाः ।
प्रहतकुमतिदर्प्पाः पाठकाः साधुकीर्त्ति
प्रवरसदभिधाना वादिसिंहा जयन्तु ॥२॥

तेषां शास्त्रसहस्त्रसारविदुषां शिष्येण शिक्षाभृता
भक्तिस्थेन हि साधुसुन्दर इति प्रख्यात नाम्ना मया ।
ग्रन्थोऽयं विहितः कवीश्वरवचो वृद्ध्योक्तिरत्नाकरः
स्वान्यानां हितहेतवे बुधजनैर्मान्यश्चिरं नन्दतु ॥३॥

इति श्री उक्तिरत्नाकरग्रंथः । संपूर्णः । कल्याणमस्तु । ६॥

**Post-colophon :** पंडित जैवाकृत मधुरदासपठनार्थं ।

## 2739/14357 कविरहस्यम्-सावचूरि

॥६०॥ ॐ नमः ॥

**Opening :**

जयंतिमुरजित्पादनखदीधितिदीपिकाः ।
मोहांधकारविध्वंसान् मुक्तिमार्गप्रकाशिका ॥१॥

प्राणायामश्रमोद्भूतरवेदार्द्रः पातु वः शिवः ।
गंगोपगूहनभ्रान्त्या पार्वत्या वीक्षितः क्षणम् ॥२॥

लोकेपु शास्त्रेपु च ये प्रसिद्धा काव्येपु ये सत्कविभिः प्रयुक्ताः ।
उच्चित्यतानखिलविनोदनाय शब्दानहं धातुभिरुद्धरामि ॥३॥

एकार्था एकशब्दाश्च भिन्नार्था एकवाचकाः ।
तुल्यार्थास्तुल्यशब्दाश्च नानार्थासदृशाक्षराः ॥४॥

एकार्थसमशब्दाश्च निबंध्यतेऽत्रधातवः । (?)
धातुपरायणांभोधिपारोत्तीर्णधिया मया ॥५॥

Closing :

उच्चटत्परयो यस्य द्रोह् उच्चाटयंति स ।
यो मंडयन्ति सम्राज्यमाभिजात्यंच मंडति ॥६५॥

खंडते वादिनां दर्पं मुंडं खंडयते द्विपाम् ।
भूषयंति गुणाः सर्वे यो गुणानेव भूषति ॥६६॥

अनुकूलयति यो धर्ममनुकूलयति स द्विजान् ।
इन्द्रे यस्य मतिर्नित्यमेधते श्रीश्चसर्वदा ॥६७॥

Colophon :

इति समाप्तसदाप्तगुणोदयं कविरहस्यमिदंरसिकप्रियम् ।
सदभिधानहालायुधसंज्ञकद्विजवरस्य कृतिः सुकृतात्मनः ॥६८॥

कविहलायुधकृतं कविगुह्यनाम ख्याते हृतस्यकविधर्मकृतास्ति टीका ।
अद्यस्य तां यदि वदंति विवादस्पष्टं क्रियांतरपद वैविजयं लभंते ॥१॥

अपशब्दाशाख्ये काव्यटीकाशतानि दशविहितश्लोकानामधिकाभितु कविना रविधर्मसंज्ञेन ॥ इति टीका प्रांताश्लोका । इति श्री कविरहस्यं समाप्तम् । इति श्री कविरहस्यावचूरि समाप्तम् ॥

Post-Colophon :

संवत् १६१७ हायने मगसिर सुदि ४ दिने भोमवासरे श्रीमद्दरिणी मध्ये लिखितैषा प्रतिरियां ॥

श्री सागरचन्द्रसूरिशाखायां वाचनाचार्यवर्य्यधुर्य्य श्री श्री ५ श्री श्री समयकलशगणिभिः तत्शिष्यमुख्यवाचनाचार्यवर्यधुर्य्य श्री श्री श्री सुखनिधान-गणिगजेन्द्राणां तत्शिष्यपंडितप्रवरश्रीगुणसेनगणिवराणाम् तत् अंतेवासी पं० यशोलाभमुनिनालेखि । शुभम् भवतु ॥

## 2749/14449 धातुरत्नाकरः-'क्रियाकल्पलता' टीकासहित

**Opening :**

।।६०।। श्रीसरस्वत्यै नमः ।।

श्रीमान् स श्रीसुमतिजिनपो बुद्धिसौभाग्यदाता
कल्याणालीं वितरतु सतां विश्वविश्वोपकारी ।
यस्मिन् गर्भे स्थितवति प्रसूः प्रज्ञया स्त्री द्वयस्य
जाता वादा पघटनपटुर्हर्षयंती जनौघम् ।।१।।

अगणितमहिमाचर्यो देवनागेन्द्रपुंभिः
प्रकटमभयदेवाचार्यवर्य्यैः सुनुत्पा ।
प्रकटितवरबिंबं पापतापापहारी
विदलतु दुरितौघं स्तंभनाधीशपार्श्वः ।।२।।

या ध्यातायोगीन्द्रैर्नमस्कृतानेकबुधजनैः सततम् ।
हृन्मुखकमलनिवासं करोतु मम भारती सार्च्या ।।३।।

दुर्वादिमत्तद्विपकेसरिभ्यो विद्यावशावल्लभवल्लभेभ्यः ।
श्रीसाधुकीर्त्याह्वयपाठकेभ्यो नमामि मद्दीक्षकाशिक्षकेभ्यः ।।४।

स्मृत्यैवं स्मरणीयांह्रीन् क्रियाकल्पलताभिधा ।
स्वोपज्ञधातुपाठस्य वृत्तिर्वर्य्याभिधीयते ।।५।।

श्रीदस्तात्परमं ज्योतिः शब्दब्रह्मैककारणम् ।
योगिवर्य्यैः सदाध्येयं चिंतितार्थसमर्थकम् ।।१।।

इन्द्रश्चन्द्रः काशकृत्स्न्यापिशलीशाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयंत्यष्टादिशाब्दिकाः ।।२।।

वीक्ष्यानेकान् धातुपाठानाद्यंतेमातृकाक्रमः ।
धातुरत्नाकरो नाम धातुपाठो विधीयते ।।३।।

**Closing :**

अष्टादशशतान्यत्र द्वाविंशत्यधिकान्यपि ।
धातूनामनुदृष्टानि दृष्ट्वा ग्रन्थाननेकशः ।।७५।।

जाड्यदौस्थ्यापहाराय पटीयान् धातुरत्नयुक् ।
धातुरत्नाकरोनाम धातुपाठो जयत्वसौ ।।७६।।

श्रीसाधुकीर्तिपाठकशिष्यस्य तु साधुसुन्दराह्वस्य ।
कृतिरेषाकविमानसकमले भ्रमरायतां नित्यं ।।७७।।

colophon : इतिवादींद्रश्रीसाधुकीर्त्युपाध्यायशिष्यलेशवाचनाचार्यसाधुसुंदरगणि-
विरचितक्रियाकल्पलतानाम्नी स्वोपज्ञधातुरत्नाकरधातुपाठवृत्तिः समाप्ता ।

अथ प्रशस्तिः— पूर्वकोटिकनाम्नि धाम्नि महसां गच्छे जिनाज्ञातरोः
गुच्छे चान्द्रकुलेकलाभिरमले सद्वृत्ततामंजुले ।
आसीदुद्यतसंयतोचितविधिश्रीवर्द्धमानोपमः
संसेव्यो धरणोरगाधिपतिना श्रीवर्द्धमानः प्रभुः ।।१।।

तच्छिष्यः समभूत् जिनेश्वरगुरुः संख्यावतामग्रणीः
योभूद्वल्लभदुर्लभस्य परिसन्मध्ये मुनिव्यंसकात् ।
निर्जित्यागमयुक्तिभिः खरतरख्यातिं नृपख्यापितं
लेभे बिंदुकुलाभद्रिदिवयंतिमिते वर्षे पुरे पत्तने ।।२।।

आसंस्तत्र युगप्रधानपदवीसीमंतिनी नायकाः
श्रीमच्छ्रीजिनचन्द्रसूरिप्रमुखाः श्रीसूरयो भूरयः ।
येषां कीर्ति नटी कृतामरतरी स्नानाप्रधानागुणैः
आरूढ़ा सुरशैलवंशशिखरेष्वद्यापि या खेलति ।।३।।

ततश्च ।। — तीर्थोर्वीकरमोक्षसिंधुभलगोरक्षाकुशास्त्रप्रति-
सर्वावाच्यजिनेशशासनयतित्राणावदाताक्षरैः ।
चंद्रेचिह्नमिषान्निजां सद्भिधामारोपयामास यो
जज्ञेऽसौ जिनचन्द्रसूरिसुगुरुस्साहिप्रबोध प्रदः ।।३।।

तत्पट्टे जिनसिंहसूरिरुदगाद् भास्वानिवानंदयन्
लोकान् साहिसारोरुहं निज गवा प्रोद्बुध्य भास्वत्प्रभः ।
आसण्मास ममारिघोषपटयामोदै सवासा दिश-
श्चक्रै वक्रमतिप्रवादिनिकरध्वांतावलीध्वंसकः ।।४।।

गंगोत्तुंगतरंगभंगविलसच्छोभर्द्धिसंस्पर्द्धिनः
स्वर्गंगा पुलिने सुनेत्रनलिने चांद्रे मृगे मोहनं ।
कुर्वन्त्योप्सरसो विशेषतरसा गायंति येषां गुणाः
तत्पट्टे जिनराजसूरिगुरवो भुंजंति राज्यश्रियम् ।।५।।

श्रीअंबिकालब्धपरप्रसादाश्चारित्रलक्ष्मीविपुलप्रसादाः
प्रतिष्ठितानेकजिनप्रसादा जयंतु पूज्या विगतावसादाः ।।६।।

सश्रेयः प्रसराः प्रसादमधुरा पीयूष यूषोत्कराः
कामोन्मादहराः कृपारसधरा आनंदकंदांकुराः ।

श्रुत्वासज्जनमानसानि रुचिरा हृष्यंति येषां गिर-
स्तत्पट्टे जिनसागरा अपि दधत्याचार्यसंज्ञं पदम् ।।७।।

येषामेषगुणान् पुराणपुरुषो वस्त्रैश्चतुर्भिः स्फुरः
जिह्वार्कैर्वदनैरनिद्यरदनैर्गौरीवरः पंचभिः
षड्भिः षण्मुख एष दोषरहितं गायंति ते जज्ञिरे
शाखायां जिनभद्रसूरिगणपा आद्यानमन्नाकिनः ।।८।।

तच्छिष्यसमजायताक्षयजया मध्ये समं वाग्मिनां
श्री पद्मादिममेरुवाचकवरा ग्रंथांवलीवाचकाः ।
यद्वाचोयमकादिचित्ररचिता भावैर्नवैर्भाविताः
श्रुत्वाद्यापि जनस्य कस्य हृदयं चित्रीयते नो इह ।।९।।

शिष्यस्ततोभून्मतिवर्द्धनोस्या विद्याप्रदानान्मतिवर्द्धनोयः ।
विनेयवर्गेषुनिसर्गवाग्मी न स्पर्द्धनं ये न चकार वाग्मी ।।१०।।

दुष्टव्यंतरसंगसज्जितबलामारिर्महा व्यंतरी
सेत्रावापुरिवारितानिजतनूं दत्वादयंती जनान् ।
येन श्रावकलोकरक्षणकृते भूपालवंद्यक्रमो
विद्यावानजनिष्ट मेरुतिलकस्तस्यांतिषद्वाचकः ।।११।।

निर्विकार सदाचार दयाकलशसन्निभाः ।
तत्सतीर्थ्या कथार्थाख्या दयाकलशवाचकाः ।।१२।।

मतिमदमरमाणिक्याभिधानाः प्रधानाः
प्रगुणगुणसमूहैर्वाचनाचार्यधुर्याः ।
समजनिषत जाग्रत्साधुमार्गाधिकारा
दलितमदनसारास्तद्विनेया उदाराः ।।१३।।

तत्पादपंकेरुहचंचरीका रुपश्रियामोहितसुंदरीकाः ।
श्लाघ्याविधातोद्यतकिन्नरीकाः श्रीसाधुकीर्त्याह्वयका बभूवुः
।।१४।।

ख्याताकब्बरपादसाहिपरिषन्मध्ये विदां साक्षिक
कृत्वावादमरवर्वगर्वचरितं निर्जित्य दुर्वादिनम् ।
आविष्कृत्यसुपौषधविधौ नेत्यक्षरं ह्यागमे
वादींद्रं विरुदं नृपादकब्बराल्लेभे समं कोविदैः ।।१५।।

शास्त्राध्यापनसत्रसद्मनियतं यैर्मंडितं भूतले
पायंपायमपायदोषविकलविद्यारसं पूरुषा: ।
श्राघ्राता इव नापरत्रविदधत्सत्प्रार्थनं वाग्मिनां
शृंगारोपमसाधुकीर्तिगणय: श्रीपाठका जज्ञिरे ।।१६।।

विमलतिलक नामा तद्विनेयेपु मुख्य:
स्वगुरुपरमभक्तश्चारुचारित्रयुक्त: ।
इहहि विजयतेऽसौ ज्ञातसिद्धांतयुक्ति:
सततमधिकमस्मद्‌भक्तिभावं दधान: ।।१७।।

तच्छिष्योस्ति च साधुसुंदर इति ख्यातो द्वितीयो भुवि
तेनैषा विवृति: कृता मतिमतां प्रीतिप्रदा सादरम् ।
स्वोपज्ञोत्तमधातुपाठविलसत्सद्धातुरत्नाकर
ग्रंथस्यास्य विशिष्टशाब्दिकमतान्यालोक्य संक्षेपत: ।।१८।।

व्योमसिद्धिरसक्षोणीमितेऽब्दे विवृति: कृता
क्रियाकल्पलता नाम्नी शुभे दीपालिका दिने ।
गुरुभक्तिप्रतिष्ठेन विद्वद्विमलकीर्त्तिना
ग्रंथोऽय प्रथमादर्शे सुविविच्य निवेशित: ।।१९।।

## 2754/17238 षट्कारकप्रतिछन्द

Opening: ।। श्री गणेशाय नम: ।। श्री अर्हते नम: ।।

धात्वैरवतथाधारश्चतुर्विध: करोति कारकं सर्वं तत्स्वातन्त्र्यविवक्षया ।
ननु सप्त कारकानि भवितुमर्हन्ति तत्कथं षट्कारकाणि भवतोच्यते ।।

अत्रोच्यते ।। संबन्धस्य क्रियायोगाभावात्कारकत्वं नास्ति । तर्हि कथं देवदत्तस्यधनमस्तीति भवेत् । अस्तीति क्रियाधनस्य न तु देवदत्तस्य ।

Closing: लिट् परोक्षे । बभूवरामोराजा बभूवेरामोराज्ञा । सकर्मकं यथा । चकार काव्यं कालिदास: चक्रे काव्यं कालिदासेन इत्यादि सर्वस्वयंभू: चेत साबोधव्यमिति ।

Colophon: इति महोपाध्यायश्रीरत्नपाणिकृतं स्वपुत्रपाठार्थं-षट्कारकप्रति-छन्दपुस्तकं समाप्तमगमदिति । श्री ।।

Post-colophon : अब्राशिववर्स्विदुमितेसु वर्षे मासे वरे भाद्रपदे च कृष्णे ।
वारेविधौ चारुतिथौ सुषष्ठ्यां षट्कारकं ग्रंथमिदं लिलेख ॥१॥
श्रीः ॥ छः ॥ श्री रस्तु ॥

## 2761/14512 अनेकार्थतिलक

Opening :

या संस्मृता प्राणभृतां क्षणेन
संसाधयेदिष्टसमस्तसिद्धिम् ।
विश्वस्य सृष्टिस्थितिनाशहेतुः
सा भारती यच्छतु वांछितं वः ॥१॥

कवीन्द्रकुमुदानन्दः कंदोद्गमसुधारकः ।
विरच्यते चतुष्काण्ड्या रम्योऽनेकार्थसंग्रहः ॥२॥

मुख्योऽत्र शब्दः प्रथमं स्वयुक्त्या संकृतः कृतः ।
परस्त्वर्थान्तरख्यायी समम्यंत इति स्थिति ॥३॥

विनालिंगविशेषेण नाऽन्यत्र पुनरुक्कता ।
नानार्थस्याऽर्थबाहुल्यात्स्थितिरेकत्र न क्वचित् ॥४॥

अकाराद्यादिभिः शब्दैः क्रमादेकाक्षराभिधः ।
ग्रन्थेऽस्मिन्प्रथमः कांड आविरस्ति सविस्तरात् ॥५॥

Closing :

हारिकंठ पिकहृष्टो हारान्वितगलेशुके ।
क्षीराब्धिजो निशानाथे क्षीराब्धिजा श्रियामपि ।
क्षीराब्धिजंतु मुक्तायां समुद्रलवणेपि च ।
क्षुरमर्द्दक इत्येष नापिते पक्षिभिद्यपि ॥

अथ क्षीराब्धिजा पुत्र स्मरे स्वभद्र कुंजरेला ॥

Colophon :

पाणिन्यहीन्द्रगुरुभागुरिभोजभेड
हेमामरादिसमुदीरितशास्त्रसारात् ।
नानार्थरत्नतिलकं स च सिद्धशब्द-
रत्नाकरं समतनोत् सुमतिर्महीपः ॥

श्रीमत्सोमभवः सलक्षसचिवो वाक्कंठभूषांकभृत्
सत्प्रसूतसुतं महीपममलं सौभाग्यदेवी च यम् ।

संकीर्णाख्य इहोज्ज्वलः समुचिते विद्वद्गिरां पूर्णतां
ग्रंथे तद्रचितेसमग्रमभजत्कांडश्चतुर्थः परम् ।।

इत्यनेकार्थतिलके चतुर्थः कांडः समाप्तः । ग्रंथाग्रं ८६८ ।

Post-colophon : श्रीरस्तु । शुभमस्तु । लेखकपाठकयोः । श्री । छः । श्री । छः ।

## 2785/14412 अभिधानचिन्तामणि-'सारोद्धार' वृत्तियुक्त

Colophon : इति श्रीज्ञानविमलोपाध्यायशिष्य वाचनाचार्यश्रीवल्लभगणि-विरचिते श्रीहैमाभिधानचिंतामणिनाममालानामसारोद्धारे षष्ठ सामान्यकांड नाम सारोद्धारः समाप्तस्तत् समाप्तेयं श्रीमद् अभिधानचिंतामणिनाममाला नामसारोद्धारः ।।

श्री वीरशासन समुद्र आविरासीत्प्रोद्यत् कलाभिरभितः प्रथितः पृथिव्यां ।
स्फूर्जन्महःप्रसरनाशितितामसौघः श्रीचंद्रगच्छ इति चंद्रइवोदित श्रीः ।। १।।

तत्रासीद् विबुधाग्रणीर्गणगुरु श्रीवर्द्धमानांतिषत्
सूरींद्रः सजिनेश्वरोदशशताशीत्यानि ते संव्वति ।
जित्वा श्रीअणहिल्लपत्तनपुरे दुर्वादिनो दुर्लभ
क्ष्मापास्याद्विरुदं वरं खरतरेत्याख्यं यः प्राप्तवान् ।।२।।

तत्पट्टेऽभयदेवसूरिरभवद्रंगन्नवांगी महा-
वृत्तिः स्तंभनपार्श्वनाथभगवन्मूर्त्तिप्रकाशैककृत् ।
तच्छिष्यो जिनवल्लभाभिधगुरुकूरक्रियाकृद्बभौ
सम्यक् पिंडविशुद्धिशास्त्रविलसत् कर्मादिशास्त्रैककृत् ।।३।।

एवं सूरिपरंपरासन इह श्रेष्ठे गणे दीप्यते
स श्रीमज्जिनचंद्रसूरि सुगुरुश्चारित्रपावित्र्यभृत् ।
तेजः श्रीमदकव्वराभिधनृपः श्रीपातिसाहिर्मुदा
ऽवादीद्यं सुयुगप्रधान इति सन्नाम्ना यथार्थेन वै ।।४।

श्री मंत्रीश्वरकर्मचंद्रविहितोद्यत्कोटिटंकव्यय-
श्री नंद्युत्सवपूर्वकं युगवरो यस्मै ददौ स्वं पदम् ।

श्रीमल्लाभपुरे दयाद्दक्षति श्री पातिसाह्याग्रहात्
नंद्यात्वा जिनसिंहसूरिसुगुरुः सस्फीत तेजो यशाः ।।५।।

सुरत्खरतराह्वस्य गच्छस्येश्वरयोस्तयो ।
धर्मसंबंधिसाम्राज्ये विजयिन्यद्भुतौजसि ।।६।।

तथा योधपुरदुर्गे सूरसिंह नरेशितुः ।
राज्ये च वत्सरे सप्तषष्ठिषट्चंद्रसम्मिते ।।७।।

पूर्वं श्रीजिनराजसूरिसुगुरोः शिष्याग्रणीः शास्त्रकृत् ।
जज्ञे श्रीजयसागरो भुवि ततः श्री रत्नचंद्रोऽभवत् ।
दीप्तोऽतोऽजनि भक्तिलाभ सुगुरुश्चारित्रसारस्ततः
चत्वारः क्रमतोबभुर्वरमहोपाध्याय मिश्रा अमी ।।८।।

श्रीमच्चारित्रसाराणां पाठकानां गुणौकसाम् ।
शिष्योऽभूद्वाचनाचार्य भानुमेरुः प्रतापवान् ।।९।।

देदीप्यंतेऽधुना तस्य शिष्यमुख्या विचक्षणाः ।
ज्ञानविमलनामानः पाठका गुरवो ममः ।।१०।।

तच्छिष्यो वाचनाचार्यो वादि:श्रीवल्लभोऽद्भत् ।
श्रीहैमनाममालायां नाम्नां सारोद्धृतिं शुभां ।।११।।

हैमव्याकरणोणादिपाणिनीयादिकं भृशम् ।
दृष्ट्वै वषोऽत्रोद्यमश्चक्रे नामकोशांश्चभूयसः ।।१२।।

तथापि वितथं यत्स्यात्तदुत्सार्यं विशारदैः ।
उपकारपरा संतो यतो दोषापकारका: ।।१३।।

एतां धीमतां नृणां पठतां च विपश्चिताम् ।
प्रसादादर्हतां शश्वज्ज्ञानं च योऽवसीयसम् ।।१४।।

आचंद्रार्कमयं नाम्नां सारोद्धारो विशारदैः ।
वाच्यमाना सदाभूमौ नंदतान्नंदयंत्वदः ।।१५।।

**Post-Colophon :** संवत् १७२२ वर्षे फागुण बदि ७ दिने श्री जिठोतरीमध्ये पं० सज्जनमथेनेन । पं० धर्मसीकस्य पठनार्थं प्रतिर्दत्ता ।

## 2801/16725 रत्नकोशकाभिधानम् (रत्नकोशः)

Opening :

॥ ६० ॥

सर्वशास्त्रमयं रम्यं सर्वज्ञानप्रकाशकम् ।
स्वल्पग्रन्थं सुबोधार्थं रत्नकोशं समभ्यसेत् ॥१॥

तत्र शतेन सूत्राणां द्वाराणां संग्रहो यथा ।
वाग् विशेषेण विज्ञानं रत्नकोशे समारभेत् ॥२॥

तच्च द्वारशतप्रोक्तं नीतिशास्त्रविशारदैः ।
तदहं संप्रविक्ष्यामि लुब्धानां हितकाम्यया ॥३॥

Closing : चतुर्दश विद्यानाम ॥ नाद । वेद । पठित । गणित । गुणित । व्याख्यान । ज्ञान । ध्यान । शस्त्र । शास्त्र । कामिनीचरित्र । भेषजा । चंडीश । सर्वचरित्र । सर्वं विद्यांताः ।

Colophon: इति रत्नकोशकाभिधानं शास्त्रं संपूर्णम् ॥

## 2807/14479 शाश्वतकोशः

Opening :

॥ ६० ॥ ॐ नम परमात्मने ॥

दग्धोत्तीर्णसुवर्णवर्णरुचिरच्छायं वसानोऽबरं
भास्वत्कौस्तुभकांतिकर्बुरपरिभ्राजिष्णु वक्षस्थलः ।
शंखं चक्रमसिं गदामविरतं बिभ्रच्चतुर्भिः करैः
आरूढो गरुडं नवीनजलदश्यामो हरिः पातु वः ॥१॥

पूर्वाचार्यप्रसादेन विदित्वा शब्दविस्तरम् ।
क्रियते शाश्वतेनायमनेकार्थसमुच्चयः ॥२॥

स्फुटार्थः पदविन्यासः शिशूनां प्रतिपत्तये ।
कृतोयमप्रबुद्धानामतः क्षाम्यंतु सूरयः ॥३॥

एष ज्ञानार्थमज्ञानां संतोषार्थं विजानताम् ।
श्रमो मम न तु ज्ञानलवगर्वितचेतसाम् ॥४॥

प्रसिद्धै रप्रसिद्धैश्च शब्दैरेषविनिर्मितः ।
प्रसिद्धैः कथितं ग्रंथमप्रसिद्धं श्च वेदितुम् ॥५॥

**Closing :**

विधानं विविधं ज्ञात्वा लेखानां सुकराणि च ।
कृत्वागूढमभिप्रायं कोशोऽयं शाश्वतः कृतः ॥८०८॥

सहसम्यक् परामृष्यनिर्नीतोऽयं प्रयत्नतः ।
शाश्वतेन समाप्तोऽयमनेकार्थसमुच्चयः ॥८०९॥

**Colophon :** इति शाश्वतकोष अनेकार्थः समाप्तः ॥

**Post-Colophon :** सं० १७६२ फा० सु० २ लि० पं० युक्तिसुंदरेण ॥ बीकानेर ॥

## 2833/14318 काव्यकल्पलता-वृत्तिसहिता

**Opening :**

॥ ६० ॥ नमः श्री शारदायैः ॥

विमृश्य वाङ्मयं ज्योतिरमरेणयतींदुना ।
काव्यकल्पलताख्येयं कविशिक्षा प्रतन्यते ॥१॥

सारस्वतामृतमहार्णवपूर्णिमेदोर्मत्वारिसिंहसुकवेः कविता रहस्यम् ।
किंविव्रतद्रचितमात्मकृतं च विद् व्याख्यास्यते त्वरित-
काव्यकृतेऽत्रसूत्रम् ॥२॥

शास्त्रारंभे शास्त्रकारः समुचितेष्टदेवतां नमस्कारपूर्वं शास्त्रस्याख्या-
प्रेक्षावत्प्रवृत्यंगप्रयोजनयुक्तमभिधेयं चाह ॥६॥

वाचं नत्वा महानंदकरसत्काव्यसंपदे ।
कविशिक्षामिमां वच्मि काव्यकल्पलताह्वयां ॥१॥

**Closing :**

त्रिलोक्यां स्फुरतः शुद्धयशसः पुरतस्तवऽ ।
सोपि विश्वंभरानाथ सोमस्य पुबंभो ॥६२॥

तद्गुणाधिकं यशः सद्गांभीर्यं गुणस्याग्रे
समुद्रो गोपादायते(?) सन्मान(?) ससरोजांतर्गगनंभ्रमरायते ॥६३॥

एवं औचित्येन तद्गुणाधिकत्वमारोप्यं ॥६॥

**Colophon :** इति श्रीजिनदत्तसूरिशिष्यमहाकविचक्रचूड़ामणिश्रीमदमरचंद्रविर-
चितायां काव्यकल्पताकविशिक्षावृत्तौ अर्थसिद्धिप्रताने चतुर्थसमस्यास्तबकः
समाप्तः ग्रं० १४५ संपूर्णश्चायम् अर्थसिद्धिप्रतानेश्चतुर्थं ॥ग्रं० ११२२॥

श्रीमद्वायरगच्छवारिधिविधौ पादारविंदद्वये
येन श्रीजिनदत्तसूरिसुगुरौ श्रृंगारमृंगायितम् ।
सश्वेतांबरमौलिस्ततमराः श्रीवीरतीर्थंकर
प्रकाशात् कृतकाव्यकल्पलतिकावृत्ति सतां सम्मताम् ।।१।।

सिक्तेप्रमुद्वृत्तैः शास्त्राब्धिभ्यः सारसुधारसैः ।
कव्यकल्पलताकल्पं तनोतु सुमनो मुदम् ।।२।।

न काव्यमेव परब्रह्माऽऽस्वादसोदरशर्मदम् ।
आलोकं पादलयामास कालिदासकवेर्यशः ।।३।।

वाल्मीकिव्यासयोर्विश्वे विश्वदिग्मूलकूल-
कल्पांतोल्लघिनी कीर्ति काव्यादेव विजृंभितेः ।।४।।

काव्यकल्पलतावृत्तौ ससूत्रायामनुष्टुभाम् ।
त्रिसहस्त्री त्रिशती च सप्त पंचाशदुत्तरा ।।५।।

इति समाप्तेयं काव्यकल्पलताकविशिक्षावृत्तिः संपूर्णाः ।। ग्रंथा २३५७ ।। श्रीः ।। छः ।। शुभंभवतुः ।।

## 2850/14351 विदग्धमुखमण्डन-सावचूर्णि

Opening : ।। ६० ।।

सिद्धौषधानि भवदुःखमहागदानां
पुण्यात्मनां परमकर्णरसायनानि ।
प्रक्षालनैकसलिलानि मनोमलानां
क्षौद्धोदनः (नेः ?) प्रवचनानि चिरं जयंति ।।१।।

जयंति संतः सुकृतैकभाजनं परार्थसंपादनसद्व्रतस्थिताः ।
करस्थनीरोपमविश्वदर्शिनो जयंति वैदग्ध्यभुवः कवेर्गिरः ।।२।।

।।६०।। अथादौ धर्मदासनामा बौद्धाचार्यः विघ्नविनाशार्थमिष्ट देवतास्तुतिमाह ।। निष्पन्नौषधनि०

Closing : सदागति हतोच्छ्रायस्तमसोवश्यतांगतः ।
अस्तमेति दीपोऽयंविधुरेक : शिवेस्थितः ।।६४।।

पूर्णचन्द्रमुखीरम्या कामिनी निर्मलांबरा ।
करोति कस्य न स्वांत एकान्ते मदनातुरम् ॥६५॥

इतिच्युतदत्ताक्षरम् ॥६॥

colophon : इति श्रीविदग्धमुखमंडने काव्यालंकारे चतुर्थपरिच्छेदः ॥

इति श्रीजिनप्रभसुरेन्द्रैः सूत्रिते विदग्धमुखमंडनटिप्पनके उपजाति प्रभेदश्चतुर्थः परिच्छेदः ॥ समाप्ता वैदग्धमुखमंडनावचूर्णिः ॥

## 2853/14308 शृंगारचूडामणि

Opening : ॥६०॥ स्वस्ति श्रीगणेशाय नमः ॥

श्रीकृष्णवेणुवादनमधरसुधा संभृतं सदा जयति ।
करपत्रं हठबंधद्विधा कृती गोपवनितानाम् ॥१॥

वितरतिभजमाने पुंसि कल्याणकोटीं
प्रणयरसभरार्द्रापांगपाती विसर्ग ।
विशदगुणगणानां कीर्त्तनैर्दुष्कृतिघ्नैः
मनसि मम स कृष्णः श्रीशचीनंदनोस्तु ॥२॥

विपदंधकारहरणे तरणिसहस्त्रोपमं स्वभक्तानाम् ।
श्रीकाशीश्वरचरणं शरणं मम सर्वदा भवतु ॥३॥

छत्रं पांडुरमौषधीपतिरिभामत्तास्त्रिधावयण-
श्चापश्चंचललोचना च विशिखा लीलाकटाक्षा दृशोः ।
भृंगाः स्वान्तिकवर्त्तिनः परभृताः प्रस्तावतुल्योक्तयो
जीवात्काममहीपति सकटकीं शृंगार सम्यो भुवि ॥४॥

प्रयागमिश्रैर्मंगवज्जनानां प्रसादलेशानुगृहीतशीलैः ।
प्रकाश्यते विश्वहितार्थमेषा शृंगारचूडामणिरादरेण ॥५॥

Closing लंकाधिपो जनकराजसुता प्रसंगात् ।
बाली बलेन वरुणोपि च तारकायाः ।
नष्टोथ कीचकगणो द्रुपदस्य पुत्र्या
विद्वान् कदापि परदाररतिं न कुर्यात् ॥४७॥

इत्थं यथामति मया कथितं रहस्यं
कृष्णस्य तत्परमकारुणिकस्य विष्णोः ।
ध्यानं यदेव पुरुषस्य रसोज्वलं यत्
सानन्दमेव सुधियः परिशोधयन्तु ॥४८॥

बर्हापीडाभिरामः शशधरवदनः कौस्तुभाक्रान्तवक्षाः
श्रीवत्सांकोवतंसप्रिय उदितलसद्भूषणैराप्तकान्तिः ।
विद्युद्वासाः सुवेषः सजलजलधरानीकसंकाशमानः
कृष्णो गोपीजनस्थः प्रभवतु भवतां भूतये क्षेमधामः ॥४९॥

colophon :

हरिक्षेत्र कुरुक्षेत्रमध्ये साधारणं पुरम् ।
पृथिव्यामिव वैकुण्ठखंडमाप्तमखंडिताम् ॥५०॥

तत्राभवद्भुवनमंगलसच्चरित्रो
गोविंदसुंदरकथारसकर्णपात्रः ।
वेदोदितक्रमविधानविशिष्टसत्रः
षट्कर्मवर्महरिशर्मधरामराग्न्यः ॥५१॥

मेघनस्तत्सुतः ख्यातो याज्ञवल्क्यइवापरः ।
ज्योतिषामयनेगर्गः साक्षात्स्वयमिवोदितः ॥५२॥

तस्यात्मजो विश्वरूपो विश्वविख्यात सद्गुणः ।
संपन्नः सर्वसंपद्भिः सत्कर्माश्रुतिविश्रुतः ॥५३॥

अध्यापको निरुपमोखिलपाणिनीये
तस्यांगजः कविनृसिंह इति प्रसिद्धः ।
यो सावचित्य महिमो हिमरश्मिरासी-
दात्मीयवंशकुमुदप्रमदाप्रपूर्णः ॥५४॥

प्रयागमिश्रस्तत्पुत्रो रसिकः कृष्णकीर्त्तने ।
महानुभावसंसर्गेसचिच्दानन्दमन्दिरः ॥५५॥

सत्पुष्करामृतपवित्रचरित्रभाजा
श्रीपुष्करेण कविना कविसत्तमेन ।
सोऽहं सहोदरवरेण सहस्त्रबाहुः
सानंदमस्मिहिमरश्मिसदोदयेन ॥५६॥

यस्याभवत्परमतीर्थमुदारकीर्तिः
कृष्णः शचीजठरसंभव एव गौरः ।
साक्षान्महीसुरकुलोदितसुदं रेंदु
वृंदावनेंदुरिव भक्तभयापहारी ।।५७।।

तीर्थं तु यस्य भगवत्परमावतारः
काशीश्वरः शरणमेकमनन्यभाजाम् ।
गौडोपवर्त्तनसमुद्रसमुद्भवेंदु
प्राभूत्प्रभुः परमकारुणिकावतंसः ।।५८।।

कवित्वे वापि वक्तृत्वे श्रीनृसिंहः पिता गुरुः ।
विद्वद्वृंदविनोदाय प्रादुर्भूत महोदयः ।।५६।।

किं मुक्तावलिभि किमत्रवलमैः किं कर्णसंवेष्टनैः
किं मुद्राभिरनुन्तमाभिरपि किं वासोभिरिष्टैरपि ।
येषां राजसभासु मानमनसामुत्कर्षयुक्तात्मनां
यद्येषा मुखपंकजे विजयते शृंगारचूडामणिः ।।६०।।

प्रयागमिश्रैरचिता विचित्र
श्रीमच्चरित्रामृतमष्टवर्णा ।
शृंगारचूडामणिरुज्वलार्थाः
श्रेयोर्थमेषार्थि जनस्य भूयात् ।।६१।।

इति श्रीप्रयागमिश्रविरचितायां शृंगारचूडामणौ प्रोष्यत्पतिकादि संकीर्णनिरुपणं चतुर्थप्रकरणं ।। ४ ।। श्री ।।

**Post-colophon :** संवत्सत्तरा १७६७ ज्येष्ठमासे कृष्ण पक्षे एकादश्यांदिने रविवारे लिखितं जगता ऋषि आत्मार्थे । शुभ भूयात् । कल्याणमस्तु । श्री । श्री ।

## 2854/16951 श्लोकयोजनारीति

**Opening :** पद्माकर पदांभोजमकरदं मधुव्रतः ।
नमामि मनसाध्यायन् परमेष्ठिनमव्ययम् ।।१।।

नृसिंहचरणद्वंद्वं प्रत्यूहव्यूहशांतये ।
दुष्टचित्तसरोमग्नकपटां कुरु संहरन् ॥२॥

यदंघ्रिसेवनादेव मम जाताधिकारता ।
मंदबोधाग्रगण्यस्य वंदेऽहं तन्महः परम् ॥३॥

विशेषणे तु पुंस्त्वादि विशेष्यस्याजहद्विना ।
कर्मकर्त्रोस्तथान्येषां षष्ठ्यादिनां विशेपतः ॥४॥

विशेषणं विशेष्यंतु भवेत्क्वचिदपि क्रमात् ।
लिंगज्ञानं तु कोषाद्वा वार्त्तया सुविपश्चिताम् ॥५॥

श्लोके मुख्यं त्रय बोध्यं कर्त्ता कर्म क्रियाप्यथ ।
तृतीया सप्तमी षष्ठी क्वचिन्मुख्या भवेत्युत ॥६॥

Closing :

खंडवाक्यार्थबोधे तु रीतिरुक्ता समासतः ।
समुदायार्थबोधे तु ज्ञेयारीतिरतोन्यथा ॥२८॥

यत्तदोर्नित्यसंबंधो विज्ञेयः श्लोकविज्जनैः ।
द्वयोरन्यतराभावेत्वध्याहारो निरंतरम् ॥२९॥

बालानां श्लोकबोधाय नीलकंठेन निर्मिता ।
श्लोकानां योजनारीतिर्वारिणीयानुकंठतः ॥३०॥

Colophon : इति श्रीपद्माकरदीक्षितात्मजसूरिसूनु ( श्री नीलकण्ठ ) विरचिते श्लोकयोजननिर्णये श्लोकत्रिंशत्कं समाप्तिमगमत् ॥ श्रीरस्तुः ॥

## 2855/14513 भरतसंगीतिसंयोगः

Opening:

॥ ६० ॥ अथभरतसंगीतिः ॥

नादग्रामस्वराः पदाविधिगुणावर्गालया तानकाः
आलत्यागमकाश्चतालरचनायोतिः कलामूर्च्छनाः ।
शुद्धाध्वागुरुरंतरागरचना देशी च सालं गणा-
गीतस्यापि समस्त सूर (त्र) रचना स्थानांतरं पातु वः ॥१॥

सप्तस्वरास्त्रयोग्रामा मूर्च्छना एकविंशतिः ।
ताना एको न पंचाशदेतद्गीतस्य लक्षणम् ॥२॥

नादरूपं परं ब्रह्म नादरूपं जनार्दनः ।
नादरूपं पराशक्तिर्नादरूपो महेश्वरः ॥३॥

**Closing :**

धा(?)हरीथ प्रकथ्यन्ते यमकं शुद्धजायते ।
छन्दोलक्षणं परित्यज्य दोषे गुणविवर्जितः ॥६॥

शिरः कंपांगकंपश्च पिनाकी टिट्टिभिः स्वरः ।
काकस्वरी अतिर्धाति गीतिदोषं स्तथाखलु ॥१०॥

**Colophon :** इति श्री भरतसंगीतिसंयोगः समाप्तः ॥ ग्रन्थ १५१ ॥

**Post-Colophon :** सं० १७७० वर्षे जेठ सुदि ५ लि० श्री हाजीखानडेरामध्ये । पं० जैतसी ॥

## 2862/17342 रत्नपरीक्षा-टीकासहिता

**Opening :**

॥ ६० ॥

अपृच्छन् मुनयः सर्वे कृतांजलिपुटास्थिता ।
प्रणिपत्य मुनिश्रेष्ठं अगस्त्यं रत्नवल्लभम् ।१।

देवदानवदैत्येन्द्रा विद्याधरमहोरगाः ।
किरीटकं कटिसूत्रं कंठाद्याभरणेषु च ।२।

संयोजितानां रत्नानां कथयोत्पत्तिकारणम् ।
मुनीनां वचनं श्रुत्वा मुनिश्रेष्ठोऽब्रवीदिदम् ।३।

**Closing :**

ख्यातंरत्नपरिज्ञानं जनानां हितकाम्यया ।
यः पठेत् मनुजो धीमान् नृपमान्यं लभेत्सदा ।३३।

रत्नशास्त्रे सदाभ्यासं यः करोति नरोत्तमः ।
सश्रियं लभते कीर्त्तिः रत्नवृद्धिः सदा भवेत् ।३४।

यावद् व्योमशरः क्रोडे राजहंसो विराजते ।
विबुधैर्वाच्यमानोऽसौ तावन्नन्दतु पुस्तकम् ।३५।

**Colophon :** इति श्रीरत्नपरीक्षाशास्त्रे अगस्तिऋषिप्रणीते षष्ठीरत्ननिर्णय केचित् स्फटिकादिरत्नस्य लक्षणगुणकथन तथापीरोजा मणिपरीक्षा तथा

त्रिधा मणिपरीक्षा वर्णनोनाम सप्तमोध्याय: ७ तत्समाप्तौ समाप्ता रत्न-परीक्षा सटीक ग्रन्थमाणं २०२८ श्लोक संख्या २२१२ श्रेय: ॥

## 2868/14520 अनंगरंगरतिरहस्यम्-बालावबोधसहितम्

Opening : ॥ ६० ॥ श्रीगणेशाय नमः ।

रतिपरिमलसिंधुः कामिनीकेलिबन्धुः
विहितभुवनमोदः सेव्यमानः प्रमोदः ।
जयति मकरकेतुः मोहनस्यैकसेतुः
विरचित बहुसेवा कामिनी कामदेवः ॥१॥

Closing तेषां द्वारि न वाजि(जी) दंति निवहास्तैस्तैलब्धा क्षिति-
स्तैरेतत्समलंकृतं निभुकुलं किंवा बहु ब्रूमये (हे)
ये दृष्ट्वा परमैश्वर्येण भवता तुष्टेन रुष्टेन वा ॥ (?)

colophon : इति श्रीकविशेखराचार्यविरचिते पंचसायके स्त्रीरतिरहस्ये नामक-मंगलाचरणवर्णने चतुर्थखण्ड समाप्तः ॥

Post-colophon : संवत् १७१८ वर्षे मिति अश्विनि सुदि ५ तिथौ । पं० गुणविमलजी गणिवराणां शिष्यमुख्य पं० कनकनिधानजी मुनि तत्शिष्य पं० हरीवर्द्धन लिपिकृतम् ॥ ग्रंथाग्रं १३३३ ॥

## 2873/17189 अजीर्णमञ्जरी

Opening : ॥ श्रीमदायुर्वेदाग्रणी नमस्कृत्य ग्रन्थारंभे
अजीर्ण रस मंजरीयंहं वक्ष्ये स्तोकं सुखहेतवे ।१।

Closing : आश्राद्य पद्यद्वयमस्तु वाणिर्वा विपद्यनवद्यविद्यः ।
श्री काशिनाथ स्मृतया शिशूनां वर्षेदवोभीरचितैरतानीत् ॥५७॥

एतन्महाजीर्णविषादनेत्री जीरायमृतमंजरी क्षा ।
सत्पद्यदानंदमयी वसंतौ णा (?) पदीनामवधारयंतु ॥५८॥

colophon & Post-colophon : इति अजीर्णमंजरी ग्रंन्थः । लिपिकृतं रूपसोभाग्येन मकसूदाबादे

## 2884/14620 चिकित्सा-सार

**Opening :** ।। ६० ।। श्रीगणपतिवरदेभ्यो नमः ।।

कमलया कलितं कमलापतिं मिलितमंबिकया शशिशेखरम् ।
सुखरोपनुतां च विधेः सुतां गणपतिं हृत विघ्न पतिं भजे ।।१।।

प्रसमीक्ष्य सिद्धयोगान् मान्यनुभूतांश्च ये च वै बहुशः ।
लिखितं चिकित्सासारे ग्रंथे क्षेमंकरः सततम् ।।२।।

**Closing :**

धातुवृद्धिं वयोवृद्धिं बलं तु विपुलं भवेत् ।
आमवात सि (शि) रोवातं ग्रंथिवातं भगंदरम् ।।
जानुजंघांतमिश्रितो वासकटिग्रहमेव च ।
अश्मरी मूत्रकृच्छ्रं भगं वातमुरोदकं ।।
अम्लपित्तं तु वा कुष्ठं प्रमेहं गुदनिर्गमे ।
कासं पंचविधं श्वासं क्षयं च विषमज्वरम् ।
प्लीहामयं श्लीपदं गुल्मं पांडुरोगं सकामलम् ।
शोथांत्रवृद्धि शूलार्ति गर्दभानि विनास (श) येत् ।।
तृष्णा सर्वांगैकांगसंजातवातव्याधिहा ।
सिंहनाद इति ख्यातो योगोयममृतोपमः ।।

।। इति सिंहनादगुग्गुलः ।।

**Colophon:** इति श्रीमिश्रक्षेमंकरविरचिते चिकित्सासारे शोणितविधिः एकोनाशीतिमोऽधिकारः ।।७९।। इति श्रीचिकित्सासार संपूर्णम् ।।

## 2915/16890 वैद्यकरत्नमाला (नवरत्नमाला) सार्थम्

**Opening :** ।। ६० ।। श्रीपार्श्वनाथाय नमः ।। ॐ ह्रीं नमः ।।

श्रीवर्द्धमानं प्रणिपत्य मूर्ध्ना निःशेषे जंत्वामयनात्सबुद्धया ।
श्रीपूर्णशेनैः सुखबोधनार्थं प्रारभ्यये वैद्यकरत्नमाला ।।१।।

अथनवरत्नमालायां प्रारंभं करिष्ये । अथ टीका प्रथम चिकित्सा १ रस २ तैलाद्य ३ चूर्ण ४ वाजीकरण ५ कुतूहल ६ गंधवाद्य ७ मुरुवा ८ दूतिकाहा ९ एवं नवरत्नमालायां कथितं ।।

## 2951/14763 लीलावती-टीकायुत

Opening : ॥ ६० ॥ ॐ नमः ॥

जयति गिरितनूजा प्राणपीयूषधारा-
हरहृदयपयोधिस्फूर्ज्जदिंदूदयश्रीः ।
त्रिभुवनमहती यः ब्रह्मविद्ध्येयमूर्तिः
सुरनरमुनिवृंदैः स्तूयमानो गणेशः ॥१॥

अल्पीयसी मम प्रज्ञा गंभीरा भास्करोक्तयः ।
सम्यक् भावमतोवक्तुमर्हं यद्यपि न क्षमः ॥

तथा व्याख्यायतः किंचित् किंचित् शास्त्रांतरात्पुनः ।
ज्ञात्वा लीलावतीं पाटीं विवृणोमि समासतः ॥३॥

Closing : सरसा सशृंगाया उक्तिर्वचनतामुदाहरंति जल्पंति सती कंठसक्ता-निर्भरालिंगनवशेन कंठलग्ना तेषां सदा सर्वस्मिन् काले सुखसंपत्कामज-सौख्यातिशयो वृद्धि प्रकर्षं मुपैति ॥

Colophon : इति सुवर्णकारभीमदेवात्मज मोष(क्ष) देवविरचिता श्रीभास्कराचार्य विरचिता लीलावतीपाटी वृत्तिःसंपूर्णाः ॥६॥

Post-Colophon : संवत्स्यत्यश्वरसाब्जमिते शुचि मासे द्वितीयायां कर्मवाट्यां लिखितं ।

## 3008/14641 ताजिकपद्धतिः

Opening : ॥ ६० ॥ ॐ नमः सिद्धिः ॥ स्वस्ति श्री गजवदनैकरदनाय नमः ॥

आकर्ण्य गर्जितं यस्य वित्रस्ताः कविदिग्गजाः ।
पितृव्यं तन्निजं नत्वा गुरुं श्रीमद्विहारिणम् ॥१॥

नानाताजिकमालोक्यऽब्दवेशफलपद्धतिम् ।
कुर्व्वे दैवविदां तुष्ट्यै श्लोकसंस्कृतसंस्कृताम् ॥२॥

Closing : मंदेबलाढ़्यवनपर्वतेषु गतिः प्रवाच्या वचनारिभीतिः ।
स्वप्नेषु राहोखलसंगमश्चमिश्रैर्विमिश्रं सततं(प्र) वाच्यम् ॥४॥

